॥ लघु वायुस्तुती ॥

॥ लघुवायुस्तुतिः ॥

वासुदेवं सदानंदतीर्थानंदसंदोहसंदानशीलम् ।
स्वामिनं सच्चिदानंदरूपं नंदयामोवयं नंदसूनुम् ॥ १॥

श्रीहनूमंतमेकांतभाजं राघवश्रीपदांभोजभृङ्गम् ।
मारुतिं प्राणिनां प्राणभूतं नंदयामोवयं नंदितीर्थम् ॥ २॥

भीमरूपं परो पेयिवांसं भारतं भारतश्रीललामम् ।
भूभरध्वंसिनां भारतीशं नंदयामोवयं नंदितीर्थम् ॥ ३॥

देवचूडामणिं पूर्णबोधं कृष्णपादारविंदैकदासम् ।
चित्तचिंतामणिं पुण्यभाजां नंदयामोवयं नंदितीर्थम् ॥ ४॥

मायिगोमायुमायांधकार ध्वंसमार्ताण्ड मूर्तीयमानम् ।
सज्जनानंदसंदोहधेनुं नंदयामोवयं नंदितीर्थम् ॥ ५॥

इंदिरानंदमानंदमूर्तिं सुंदरीमंदिरामिंदुकांतिम् ।
दासमेकं तथा तत्त्वरूपं नंदयामोवयं नंदितीर्थम् ॥ ६॥

इति श्रीकल्याणीदेवी विरचितं
लघुवायुस्तुतिः सम्पूर्णम्
॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णार्पणमस्तु ॥